# जटावल्ली

वागीशप्रभृतिस्तुत्यं प्रणम्याहं गणाधिपम्
वागीशं च तथा श्रीशं वरदं जगतां पतिः १
क्रमेण द्विपदं ब्रूयाद्व्युत्क्रमेणोत्क्रमेण च
सलक्षणं सर्वसन्धौ जटा सा प्रोच्यते बुधैः २
अस्याः प्रमाणं प्रथमे प्रातिशाख्ये प्रपाठके
रेफादेशेऽपि शब्दाच्च न धामेत्यार्षशब्दतः ३
त्रिक्रमेष्वष्टधासन्धि द्वौ द्वावाद्यन्तयोरपि
आर्षसंज्ञं स्व एवात्र सन्धयोन्येत्वनार्षकाः ४
अन्यत्र पञ्चधा सन्धिः तत्रामृन्तौ तथार्षगौ
समौ वर्णस्वरौ यत्र तत्रैकस्सन्धिरार्षकः ५
पदद्वयं षट्पदञ्च तथा नवपदं वदेत्
स्वरवर्णा विशेषे च विशेषे त्रिक्रमे क्रमात् ६
पदत्रयं समारुह्य त्रिक्रमे तु ससन्धिकम्
अवरुह्य यथान्यायं पुनरारोहणं स्मृतम् ७
सन्धिष्वेवविलोमेषु सूत्राद्दृष्टं यदस्ति वै
न्यायादनुगृहाद्यच्च दृष्टान्ताद्यत्तदुच्यते ८
सूत्रार्थन्यायसंबन्धबलाद्यत्र विशिष्यते
विलोमे न्यायतः प्राप्ता सन्धिरित्यभिधीयते ९
प्रधानस्य तृतीयत्वन्त्रिपदप्रभृतिस्मृतम्
ऋचिब्राह्मणवाक्येषु पूर्वन्त्रिपदमेव हि १०
त्रिपदप्रभृतिन्यायो लोपालोपेषु विद्यते
तत्र स्थमन्ययुक्तञ्चेत्पूर्वधर्मो न विद्यते ११
गृहणान्त्वेकमुद्दिश्य पदं वै क्रियते यतः
तदन्यत्र तु न ग्राह्यं यज्जटाभिमतैरिति १२
संहितावद्विधिप्राप्तं बहवो न वदन्ति यत्
अद्ध्येतारो जटाकाले तत् बाह्मादृतमुच्यते १३

यत्रार्षेनुद्धृतस्सन्धिर्जटायामुद्धवेद्यदि
तत् ब्राह्मणारण्यकोक्तसन्धिदृष्टान्तमुच्यते १४
तथेयातां ब्राह्मणायेत्योपेत्याक्षरसंहिता
तत्रापि पूर्वप्राबल्यादैकारोऽत्र न संभवेत् १५
षत्वे प्राप्ते शकारस्य वर्णशिष्टे ततः परम्
नकारः प्राकृतस्तस्माच्छ्नथद्वृत्रमिति स्थितम् १६
निमित्तप्रतिषेधे तु न निमित्तबलाद्विधिः
ईड्यशब्दत्वसंख्याने विधिर्न प्रतिषेधभाक् १७
यथा पुनः कृधिबलान्न सत्वविधिरिष्यते
प्राधान्यात्पुनरित्यस्य निमित्तत्वात्कृधेरिति १८
यत्र स्यान्महिसृज्यत्थ्वन्तत्र षत्वन्न पौरुषे
ऋवतः प्रतिषेधाच्च महिसप्तच दर्शनात् १९
इडस्परिधिरित्युक्ते समिश्रत्वनिषेधकृत्
तत्रेड्यस्याप्यनेकस्यात्तथा विश्वायुरित्यपि २०
स्तोमाय ज्योतिरित्यत्र षत्वंसस्य न विद्यते
अनवग्रहपूर्वत्वाद्विद्भावस्तथा सति २१
अप्रसक्तेन्निषेधस्य न प्रतिप्रसवस्मृतः
प्रतिप्रसवता यस्य षत्वन्तस्यै वनान्यथा २२
टवर्गात्परभूतस्य लस्य दुश्लिष्टताभवेत्
अन्यथा चेद्विरामाच्च द्वित्वा भावाद्विरुद्ध्यते २३
अनार्षगृहणाद्यत्र प्रकृतिस्संहिता विधौ
आद्यन्तयोर्जटायान्तु ह्यार्षत्वात्प्रकृतिर्भवेत् २४
यत्वरेपौ विनान्यत्र गृहणान्दृश्यते यथा
षत्वणत्वादि सर्वत्र कर्त्तव्यमनुलोमवत् २५
यस्यैवार्षे यत्वरेपौ स्यातान्तस्य हि पौरुषे
सति स्वरपरे तद्वन्निषेधो नान्यथा भवेत् २६

प्रधानं वा निमित्तं वा द्विपदगृहणं यदि
व्युत्क्रमे सर्वतो ग्राह्यं क्रमे तत्रैकदेशतः २७
यो लोपे सोत्तरस्तिष्ठन्त्येकधा गृहणान्तथा
इत्येकमन्तिमो लोपो न निमित्तमवेक्षते २८
अन्वित्यस्य यथा लोपस्संहितायान्तथैव हि
जटायामपितस्यैव लोपो न्यस्य न क्वचित् २९
न भवेद्ध्रस्वभाग्दीर्घश्लिष्टेऽपि प्रातिलोमके
तथा निमित्ता सत्भावे प्रगृह्यन्न विधायकम् ३०
न निमित्तात्ककारान्तं पकारान्तञ्च पौरुषे
अनुष्टुप्त्रिष्टुभौ शब्दावस्त्वनुष्टुबसीतिवत् ३१
उदधीत्यत्र दीर्घस्य ह्रस्व स्यादुपलक्षकः
तथा प्रपर इत्यत्र ह्रस्वो दीर्घोपलक्षकः ३२
सूत्रेष्वदृष्टं यत्किञ्चित्सूत्रान्तरबलाद्विधिः
अनुक्तस्यापि रुद्धस्य मतं ग्रहणमन्यतः ३३
यथा विप्रत्तौ मात्रोक्तेः पारवत्यादिसम्मता
पूर्वत्र तुन्वोस्थितये सर्वलोपव्यये स्थिते ३४
उदः परस्सलोपस्तु तस्मिन्स्थास्तं भवे सति
लोपाभावो मकारस्य क्लिबन्तौ राजतौ परे ३५
तेषामेव प्रसिद्धत्वादविशेषेण सूचितम्
तेषामेव विलोपेऽपि नान्येषां सविधस्मृतः ३६
पृक्तादपृक्ते दीर्घश्च गुणो वर्णात्परश्च सः
अन्वारभ्यान्नमन्यञ्चेत्यतृणत्वं प्रयुज्यते ३७
यस्मात्पार्यादि पूर्वत्वन्तथापि न वदन्ति हि
उपूर्वस्य नकारस्य णत्वं कुर्याद्विचक्षणः ३८
पूर्वं पश्चाट्टकारस्य यथावरणमदर्शनात्
सत्वमाकारपूर्वोऽपि यथाग्नास्त्वेति दर्शनात् ३९

अप्यपाच्छस्यागमस्यादपच्छिष्टेति दर्शनात्
अनुस्वारोऽपि नित्यस्यात्सर्वत्रैकपदे स्थितः ४०
ततोऽन्यस्संसदश्चेतिस्त्राद्यभावादनित्यतः
पुनरुक्तं यतः पञ्चपदमित्युत्तरञ्च वा ४१
पूर्ववद्भवति ज्ञेयं सर्वत्रापि विचक्षणैः
संहितावत्क्रमो ज्ञेयो जटा च विकृतादिषु ४२
आर्षेकार्यम्मुखेऽन्ते च अन्यत्स्यादुभयत्र हि
आयोऽध्वर्यो कृतो पूर्वे लोपस्यादप्यसंहिते ४३
लुप्तो यदि भवेदार्षः क्रियते नान्यथा बुधैः
असूत्रितेषु स्थानेषु पौरुषे येषु वर्त्तते ४४
ग्रन्थान्तरे यथा तद्वदिदं शास्त्रं यदृच्छया
कृद्ध्युत्तरे पुनश्शब्दाद्विलोमे सत्वमिष्यते ४५
नादध्वरञ्चेति सूत्रेणावग्रहस्थो निषिद्ध्यते
अचि परे यथा रङ्गः पूर्वो ह्रस्ववदुच्यते ४६
हलि परे यथा रङ्गः पूर्वो दीर्घो भवेद्यदि
तथैव म-- नीत्यत्र विलोमे यत्वमिष्यते ४७
संहितायामभावाच्च मिथुन्यष्टौ च दर्शनात्
न नूनन्नृत्यन्ति न ह्यत्यन्यशब्देऽन्य उच्चकः ४८
नकारो द्वित्वगोलक्ष्यान्नणत्वं प्रातिलोमके
पदाक्षराङ्गवर्णानां द्विविधा पदसंहिता ४९
इयन्नाना पदयुते चोद्यन्ते पञ्च संहिताः
कखपोर्दध्वनिमित्तेन यत्र सत्वादिकं भवेत् ५०
तत्रैव क्षपरश्चेत्सा तद्विधिं याति न क्वचित्
क्रम्यार्दध्वनो भवत्यग्रे पापकोर्पयतीति च ५१
विषयोऽगिर इत्येवाप्यग्र इत्यादि लुप्यते
परित्वा पुनर इर्जायन्नोऽस्य रातीयत स्मृतः ५२

सप्तते पो अनुत्वग्ने त्वंगो मांश्चाधिरोचने
चित्रञ्च भवतन्दृप्सः पुनश्चेदोत्स ऐक्यतः ५३
पवस्वम्व्रतपास्सूर्ये परो ज्ञे वै पुनस्तथा
यः प्राणतस्तथायुर्दाः प्राणं मे मयि केन च ५४
येनाग्नेऽस्मिन्थ्सधस्थे च वाज्यद्ध्वनो न लुप्यते
त्रिपदप्रभृतिष्वेव बलीयस्य नियोगता ५५
अलोप एव कण्ठोक्तेरन्ययोगेऽपि सर्वदा ५६
इति जटावल्ली समाप्ता

Reference:
Jaṭāvallī, or Jaṭā-Nyāya-Pañcāśat, Mysore Governmental Oriental Manuscript Library, Telugu script on palm leaves, 4 folios, (P 4772/16).
Jaṭāvallī (also known as Jaṭā-Nyāya-Pañcāśat), Venkateshwara University Oriental Research Institute Library, Grantha script on palm leaves, folios 27 - 29, Manuscript #4378, part f.